नवानां नवतीनां विषस्य रोपुषीणां ।
सर्वासामग्रभं नामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥१३॥
नवानां । नवतीनां । विषस्य । रोपुषीणां ।
सर्वासां । अग्रभं । नाम । आरे । अस्य । योजनं । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥१३॥

नवानां नवतीनां नवाधिकानां नवतिसंख्याकानां नदीनां । पुनः कीदृशीनां । विषस्याव्यापकस्य सर्वस्य विषस्य रोपुषीणां लोपयित्रीणां छेत्त्रीणां । सर्वासामुक्तानां गंगादिनदीनां नामाग्रभं । गृह्णामि । संकीर्तयामि ॥ गृहेश्छांदसे लुङि च्छांदसश्च्लेर्लुक् । हग्रहोर्भः ॥ अस्य योजनमित्यादि गतं ॥

त्रिः सप्त मयूर्यः सप्त स्वसारो अग्रुवः ।
तास्ते विषं वि जभ्रिर उदकं कुंभिनीरिव ॥१४॥
त्रिः । सप्त । मयूर्यः । सप्त । स्वसारः । अग्रुवः ।
ताः । ते । विषं । वि । जभ्रिरे । उदकं । कुंभिनीःऽइव ॥१४॥

त्रिः सप्तैकविंशतिसंख्याका मयूर्यो मयूरस्त्रियः । ता विषकारिसर्पद्वेषिण्य इति प्रसिद्धा नागद्वेषिगरुडपक्षादुत्पन्नत्वात् । तथा सप्तैतत्संख्याकाः सर्पणस्वभावाः स्वसारः स्वयमेव सरणा अग्रुवः । नदीनामैतत् । सुरगंगायाः प्रसिद्धाः सप्त नद्यः संति । तास्ते हे देह तव विषं वि जभ्रिरे । विशेषेण हरंतु । तत्र दृष्टांतः । उदकं कुंभिनीः कुंभिन्यः कुंभवत्यः कुंभेन जलहारिण्य इव । ता यथा तद्धरंति तद्वन्नद्यो मयूर्यश्चातिप्रभूतं हरंतु ॥

इयत्तकः कुषुंभकस्तकं भिनद्म्यश्मना । ततो विषं प्र वावृते पराचीरनु संवतः ॥१५॥
इयत्तकः । कुषुंभकः । तकं । भिनद्मि । अश्मना । ततः । विषं । प्र । ववृते । पराचीः । अनु । संऽवतः ॥१५॥

इयत्तकः कुत्सितेयत्तः । अल्पप्रमाण इत्यर्थः । कुषुंभकः कुं पृथ्वीं सुंभति विलिखतीति सर्पाणां कुत्सितं सुंभयिता निग्रहीता कुषुंभको नकुलः । स ते विषं हरत्विति शेषः । यदि न तथा स करोति तकं कुत्सितं तं नकुलमश्मना भिनद्मि । विदारयामि । विषनिर्हरणप्रयोगे यावद्विषापगमं तं पाषाणानुघातमनुतिष्ठंति तद्विदः । तदिदमत्रोक्तं । तत एवं प्रयोगे सति विषं प्र वावृते । विषावृताद्देहाद्विषं प्रवर्तते । निर्गच्छतु । काः प्रति । उच्यते । पराचीः परागंचनवतीरतिदूरगाः संवतः संविभागवतो दिशोऽनु लक्षीकृत्य । दिगंतं प्रति गच्छतु न मां प्रति गच्छत्वित्यर्थः ॥

अध्यायोपाकरणोत्सर्गयोः कुषुंभकस्तदित्यंत्या विनियुक्ता । दधिसक्तूञ्जुहोतीत्युपक्रम्य कुषुंभकस्तदब्रवीत् । आ॰ गृ॰ ३. ५. ५. । इति सूचितत्वात् ॥

कुषुंभकस्तदब्रवीद्गिरेः प्रवर्तमानकः । वृश्चिकस्यारसं विषमरसं वृश्चिक ते विषं ॥१६॥
कुषुंभकः । तत् । अब्रवीत् । गिरेः । प्रऽवर्तमानकः । वृश्चिकस्य । अरसं । विषं । अरसं । वृश्चिक । ते । विषं ॥१६॥

एवं महानुभावेनागस्त्यमहर्षिणोच्यमाने सति गिरेः सकाशात्प्रवर्तमानकः प्रवर्तमानोऽतिशीघ्रमभिगच्छन् कुषुंभको नकुलस्तदब्रवीत्। तद्वाक्यमाचख्यौ। किं तदिति उच्यते। वृश्चिकस्यैतद्विषमरसमसारं। बाधकं न भवतीत्यर्थः। तथा लोकेऽपि सर्पदष्टमपि क्रिम्यादिदंशनमेव अतो न बाध इति हि वदंति। एवमभिवचनेन सोऽपि निर्विषोऽभवत्। अथ तं वृश्चिकं प्रति नकुल आह। हे वृश्चिक ते विषमरसं। अतस्त्वमृषिं किं करिष्यति। तस्मात्परिहरेति। यदैवमवादीत् तदाप्रभृति वृश्चिकविषमसारमभवत्। एषा विषनिर्हरण्युपनिषत्॥ ॥१६॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे द्वितीयाष्टके प्रथमे मंडले चतुर्विंशोऽनुवाकः प्रथमं मंडलं च॥

# ABBREVIATIONS USED IN THE REFERENCES.

अथ° Atharva-veda Sa*m*hitâ.

अनु° Sarvânukrama*n*î Paribhâshâ.

अनु° ऋ° Sarvânukrama*n*î on Rig-veda, Ma*n*-*d*ala . , Sûkta . .

अम° Amarakosha.

आ° Â*s*valâyana's *S*rauta-sûtra.

आ° गृ° Â*s*valâyana's G*r*ihya-sûtra.

आ° प° Âpastamba's Paribhâshâsûtrâ*n*i, M.M. in Zeitschrift der Deutschen Morgenl. Gesellschaft, vol. ix. pp. xliii seqq.

आप° Âpastambîya *S*rauta-sûtra.

आप° गृ° Âpastambîya G*r*ihya-sûtra.

आर्य° The Âryabha*t*îya, edited by Dr. H. Kern. Leiden, 1874.

उ° U*n*âdi-sûtras, ed. Aufrecht. Bonn, 1859.

ऋ° and ऋस्वे° Rig-veda.

ऋग्वि° Rigvidhâna, ed. R. Meyer. Berlin, 1878.

ऐ° आ° Aitareya Âra*n*yaka.

ऐ° ब्रा° Aitareya Brâhma*n*a.

क° उ° Ka*th*a Upanishad.

का° Kâ*s*ikâ [1].

कौ° उ° Kaushîtaki-Brâhma*n*a Upanishad.

छां° उ° *Kh*ândogya Upanishad.

जै° न्या° *G*aiminîya Nyâya-mâlâ-vistara, ed. Goldstücker. London, 1878.

तां° Tâ*nd*ya Mahâ-Brâhma*n*a.

तै° आ° Taittirîya Âra*n*yaka.

तै° प्रा° Taittirîya Prâti*s*âkhya.

तै° ब्रा° Taittirîya Brâhma*n*a.

तै° सं° Taittirîya Sa*m*hitâ.

धा° Dhâtupâ*th*a, ed. Westergaard.

नि° Yâska's Nirukta, ed. Roth.

नृ° ता° N*r*isi*m*ha Tâpanîya Upanishad.

नै° Naigha*nt*uka, ed. Roth.

परा° Parâ*s*ara Dharma*s*âstra.

परि° Nâgo*g*îbha*tt*a's Paribhâshendu*s*ekhara, ed. Kielhorn. Bombay, 1868 [1].

पा° Pâ*n*ini [1].

पिं° Piṅgala's *Kh*anda*h*-sûtra, ed. Weber, Indische Studien, vol. viii.

पू° मी° *G*aimini's Mîmâ*m*sâ-dar*s*ana.

फि° *S*ântanava's Phi*t*-sûtra, ed. Kielhorn. Leipzig, 1866.

बृ° B*r*ihad-devatâ (Adhyâya and *S*loka), MS.

बृ° उ° B*r*ihad Âra*n*yaka Upanishad.

म° Mahâbhâshya, ed. Kielhorn [1].

मनु° Manu Sm*r*iti.

मुं° उ° Mu*nd*aka Upanishad.

मै° उ° Maitri Upanishad.

वा° सं° Vâ*g*asaneyi Sa*m*hitâ.

वेदां° Bâdarâya*n*a's Vedânta-sûtras.

शत° (ब्रा°) *S*atapatha Brâhma*n*a.

शि° Pâ*n*inîya *S*ikshâ for Rig-veda (*S*loka), Indische Studien, vol. iv. pp. 360 seqq.

श्वे° उ° *S*vetâ*s*vatara Upanishad.

[1] Vârttikas have been referred to by पा° with four figures, giving the Sûtra in Pâ*n*ini and the number of the Vârttika in Kielhorn's edition of the Mahâbhâshya. म° has been used instead of पा° when Sâya*n*a does not quote the Vârttika itself, but Patañ*g*ali's note on it. When a Vârttika does not occur in the Mahâbhâshya, but in the Kâ*s*ikâ only, it has been referred to by का° with four figures. This does not mean that Sâya*n*a had just this or that book in his mind, but is only meant to facilitate the finding of a quotation. When references are given to the Paribhâshendu*s*ekhara, this does not mean that Sâya*n*a knew this book, but that the passage referred to will help to explain Sâya*n*a's meaning. A few grammatical quotations have not been found either in the Mahâbhâshya or in the Kâ*s*ikâ. In those cases the Sûtra of Pâ*n*ini has been given with an * after it. They will be found in the Siddhânta Kaumudî or in the Ga*n*apâ*th*a, etc.